ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

**(A REFEREED QUARTERLY RESEARCH JOURNAL)**

४० वर्षे चतुर्थोऽङ्कः ( अक्टूबरमासाङ्कः ) २०१५ ई०

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**




प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

( मानितविश्वविद्यालयः)

नवदेहली-११००१६

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

**सम्पादकमण्डलम्**

प्रो० जयकान्तसिंहशर्मा

प्रो० हरेरामत्रिपाठी

प्रो० भागीरथिनन्दः

**सहसम्पादकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ,** नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

## सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण–निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

प्रकृत्यैव मानवः परितो विद्यमानं वस्तुजातं जिज्ञासते, तस्येयं प्रवृत्तिर्न केवलं तच्चेतनत्वं प्रमाणयत्यपितु तदुत्तरोत्तरवस्तुतत्त्वजिज्ञासानिरूपाधिकाखण्डज्ञानरूपतां च पुष्णाति। स हि स्वरूपानुगुणमेव स्वल्पमंशतो वा विज्ञाय न विरमत्यपितु निगूढं निगूढतरं निगूढतमं तद्रहस्यमाविष्कर्तुं प्रवर्तते यावदात्मस्वरूपविज्ञानम्। नामरूपात्मकेऽस्मिन् जगति यथा ज्ञेयं तथैव तज्ज्ञापकमप्यतितरां महत्त्वं बिभर्तीति सकलतत्त्वावेदकस्य वेदस्यातिलोकं माहात्म्यं प्रथते। नित्यश्शब्दो हि भगवान् अनन्तार्थबोधनसामर्थ्यं धत्ते यदीयमचिन्त्याद्भूततात्पर्यप्रकाशनप्रभावं तदनुरूपपदान्तरान्वययोग्यताबीजञ्च निपुणमाकलयितुमनु–जग्राहैवं भगवती श्रुतिः– अथो वागेवेदं सर्वम्, वाचीमा विश्वा भुवनान्यर्पिता। शब्दस्यैवंविधैश्वर्यविशेषं याथार्थ्येनाकलयद्भारतीयतत्त्वचिन्तनपरम्परायात्रत्यो वैयाकरणसमवायः, यो हि स्वशास्त्रारम्भे तत्पारमार्थिकस्वरूपं निश्चेतुम् अथ गौरित्यत्र कश्शब्द इत्युपक्रम्य प्रकामं प्रत्यपीपदत्। तत्र चैवं निरणायि अस्ति गौरित्यनेन वाच्यवाचकभावादिः सम्बन्धः, अत एव शाब्दबोधेन गवि समवायेन गोत्वमिव शक्त्याख्यसम्बन्धेन शब्दो विशेषणतया भासते। चाक्षुषबोधेऽपि व्यक्त्या स्मारितः शब्दो विशेषणमिति सर्वेषामभ्युपगमः। अत आह भर्तृहरिः–

**न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥**

किमधिकम्, भूरित्युक्त्वा भुवमसृजदिति श्रुत्या भगवतः सृष्टिविषयिणीच्छापि शब्दानुविद्धैव भवतीति।

शोधप्रभायाः अस्मिन्नङ्के विविधविषयविश्लेषणपरा दश लेखाः प्रकाश्यन्ते। एवं प्रतिभा–विशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो. रमेशकुमारपाण्डेयः**
कुलपतिः

# विषयानुक्रमणिका

## संस्कृतविभागः


| | | | |
|---|---|---|---|
| 1. | धर्मशास्त्राचारे मानवीयमूल्यबोधः | **डॉ. सुधांशुभूषणपण्डा** | 1 |
| 2. | वर्तमानसन्दर्भे भारतीयदर्शनस्योपयोगिता | **डॉ. सच्चिदानन्दस्नेही** | 8 |


## हिन्दी विभाग


| | | | |
|---|---|---|---|
| 3. | भारतीय संस्कृति और समाज : एक समीक्षा | **डॉ. पी. के. पण्डा** | 14 |
| 4. | आधुनिक महाकाव्यों में समत्व की भावना | **डॉ. कमलेश रानी** | 18 |
| 5. | न्याय में तर्क–मीमांसा (द्वितीय भाग) | **डॉ. अरुण मिश्र** | 26 |
| 6. | गीतोक्त निष्काम कर्मयोग का आधुनिक सन्दर्भ में महत्त्व | **डॉ. ब्रह्मानन्द पाठक** | 58 |
| 7. | श्रीमद्भगवद्गीता में चैतन्य विज्ञान एवं कर्ममीमांसा | **श्री सर्वेश कुमार मिश्र** | 74 |
| 8. | नैतिक उत्कर्ष में ईशोपनिषद् का योगदान | **डॉ. दिव्या त्रिपाठी** | 86 |


## English Section


| | | | |
|---|---|---|---|
| 9. | Role of Women in World Peace | Dr. Sangeeta Sharma | 92 |
| 10. | A Study on VAIRĀGYA | Vimala Padmavathy Amma | 99 |

# धर्मशास्त्राचारे मानवीयमूल्यबोधः

**डॉ. सुधांशुभूषणपण्डा**

अष्टादशविद्यास्थानेषु धर्मशास्त्रस्य स्थानमतीवमहत्त्वपूर्णमस्तीति मनीषिभिः प्रतिपादितम्। धर्मशास्त्रमिदं स्मृतिशास्त्रं वेदानुमापकञ्च भवति। धर्मशास्त्रस्य महत्त्वविषये आचार्याः इत्थं प्रतिपादयन्ति यत्–धर्मशास्त्रमिदं जन्मत आरभ्य मरणान्तं समग्रं मानवजीवनं अभिव्याप्याप्नोतीति परमोपकारकं, मनुष्यमात्रस्य भारतीयस्य च। स्वयं प्रभुरेव ब्रह्मादिक्रमेण चतुर्विधभूतनिकायगर्भितं स्थावरजङ्गमात्मकं जगत्, धर्माधर्मौ च प्रतिपादयामास। महर्षिव्यवहारक्षमाणां श्रुतिस्मृतिधर्मसूत्राणां विवेचनेन मनु–विष्णु–यम– दक्ष–गौतमप्रभृतिस्मृति–शास्त्राणि प्रामाण्यं यथा भजन्ते, तथैव प्राचीनानामस्मादृशानाञ्चाधुनिकानां निर्वाहाय वेदानुमापकाः धर्मशास्त्रग्रन्थाः विरचिताः। धर्मशास्त्रस्य वस्तुतः धर्माय शास्त्रं, धर्मस्य शास्त्रं, धर्मप्रयोजकं शास्त्रं च इत्येवं प्रकारेण विग्रहत्वेऽपि, कोऽयं धर्मः? किमस्य धर्मस्य धर्मशास्त्रप्रतिपादितस्य मूल्यबोधत्वं विराजत इति मनसि प्रश्नः उदेति। तत्रादौ "धारणाद् धर्ममित्याहुः" इत्यस्माद् वैयासिकात् वचनात् यं लोको धारयति स धर्मः उत यो लोकं धारयति स धर्म इति विचिकित्सायां **''धर्मो धारयति प्रजा''**[1] इतीदं वैयासिकं सन्देहनिवारकं च वाक्यं तत्रैव विराजते। एतेन धर्म एव लोकस्य धारक इति निश्चीयते। अतः सोऽयं धर्मः मानवीयमूल्यबोधस्य प्रतिष्ठापको इति सद्भिर्निगद्यते। पुनश्च, **यमार्या क्रियमाणं हि संशत्यागमवेदिनः स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते**[2] इति आपस्तम्बधर्मसूत्रमतानुसारं यदुच्यते तत्र विचारोऽपेक्षते। यतो हि धर्मस्य प्रत्यक्षप्रमाणाभावात्। प्रत्यक्षं हि वर्तमानस्यैव भवति। धर्मस्तु भूतभविष्यद्वर्तमानरूपकालत्रयावच्छिन्नानुष्ठेयकर्मकरणोपेतभावनारूपतया वर्त्तमानत्वात्, नानुमानं हेतोरग्रहणात्, नोपमानं प्रमाणसादृश्यमूलकत्वादुपमानस्य, नार्थापत्तिः प्रमाणं प्रत्यक्षावगतानुपपद्यमानार्थ–पूर्वकत्वात्। वैदिकया चोदनया लक्षितस्य धर्मस्य श्रेयसाधनताप्रतिपादकत्वेन श्रुतिरेव **''धर्मो विश्वस्य जगतः प्रतिष्ठा''**[3]इत्युद्गीरति, तदनुमापकत्वेन स्मृतिरपि **''वेदोऽखिलो धर्ममूलम्''**[4],**''ओं वेदो धर्ममूलमि''**[5]ति प्रतिपादयति। तत्रैव मनुयाज्ञवल्क्यादयः धर्मशास्त्रस्य वेदमूलकत्वं धर्मप्रतिपादकत्वञ्च संसाधयन्ति।

---

1. महा. क., 69/58
2. आप. ध. सू., 1/7/20
3. तै. आ./ध. द्रु., पृ.–8
4. मनु., 2/6
5. गौ. ध. सू., 1/1/1

तद्यथा– **श्रुतिस्मृत्युदितो धर्मोऽनुतिष्ठन् हि मानवः।**

**इह कीर्तिमवाप्नोति प्रेत्ये चानुत्तमं सुखम्॥**[1] इति

मानवशास्त्ररूपेण मनुष्याणां हितसाधकत्वेन धर्मशास्त्रं विराजतेतराम्। मनुष्याः कथमिति निरवाचि यास्कः– "मत्वा कर्माणि सीष्यन्ति" (ज्ञात्वा कर्माणि सीष्यन्ति तक्ष्यन्तीत्यर्थः) अथवा मनस्यमानेन प्रजापतिना सृष्टाः।

**मनस्यतिः पुनरयं धातुः मनस्वी भावे। मनस्वीभावे नाम प्रहृष्टेन= प्रहृष्यता प्रजापतिना एते सृष्टाः। अथवा मनोरपत्यानि मनुष्याः।**[2] समेषामेव मनुष्याणां हितसाधकं भवति धर्मशास्त्रम्। तदेव उच्यते महाभारतकारेण–

**उपकाराय लोकस्य त्रिवर्गस्थापनाय च।**

**नवनीतं सरश्वत्या बुद्धिरेषा प्रभाविता॥**[3]

तदिदं लोकहितकरं धर्मशास्त्रं न केवलं उच्चवर्गाणां कृतेऽपि तु सकलकुटुम्बिनां कृतेऽपि परमावश्यकं भवति। कारणं यत् परिवारमुख्यः परिवारस्य कर्णधारो भवति। कुटुम्बस्य पालन–पोषणं, संयमनं, नियन्त्रणं, सच्चरित्रशिक्षणञ्च प्रत्येकपरिवारमुख्यस्य धर्मः। तदर्थमुच्यते मिताक्षराकारः विज्ञानेश्वरः–

**"एते सामादयो न केवलं राजव्यवहारविषयाः अपि तु सकललोकव्यवहारविषयाः।"**[4] अपि च श्रुतिरपि–

**श्रेयश्च प्रेयश्च मनुष्यमेतः तौ सम्परीत्य विविनक्ति धीरः।**

**श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योग–क्षेमात् वृणीते॥**[5]

मूल्यबोधः धर्मशास्त्रस्य मूलमन्त्रः। मूल्यबोधविहीनेन जीवनेन न समाजस्य नापि आत्मनः उन्नतिर्भवति।

धर्मशास्त्रमिदं मुख्यतया भागत्रयेषु भज्यते, तेषु आचारभागोऽन्यतमः। आचारः मनुष्यस्य मानवीयगुणानां मानवीयमूल्यबोधस्य च द्योतको भवति।

**आचाराल्लभते चायुराचारादीप्सितां गतिम्।**

**आचाराद्धनमक्षय्यमाचाराद्धन्त्यलक्षणम्॥**[6]

इत्यस्मात् विष्णुवचनात् आचारेण मानवीयमूल्यबोधाः द्योत्यन्ते। "आचारस्यास्य शीलपदेनापि ग्रहणं भवति।"

---

1. मनु., 2/9
2. निरूक्तः, 3/2/1
3. म. भा. शा.– 59/76
4. या. स्मृ. मिता. 1/346
5. श्रुति... पुरु–12
6. विष्णुस्मृतिः, 71/91

हारीतोक्तं **ब्रह्मण्यता देवपितृभक्तता सौम्यता अपरोपतापिता अनसूयता मृदुता अपारूष्यता मैत्रता प्रियवादिता कृतज्ञता सरण्यता प्रशान्तिश्चेति त्रयोदशविधं शीलम्।**[1] एतेषामाचारस्य पर्यायवाचित्वमिति प्रपञ्चितं वाचस्पतीये[2]। अपि च **''शीलं नाम रागद्वेषपरित्याग''**[3] इति गोविन्दराजः। पुनश्च **''शीलं समाधानं, समाधानञ्च मनसो व्यापारो यच्चेतसोऽन्यविषयेषु विक्षेपपरिहारेण शास्त्रार्थनिरूपणप्रवणता तच्छीलमुच्यत इति कुल्लूकभट्टः**[4]। महाभारते च

**अद्रोहः सर्वभूतानां कर्मणा मनसा गिरा।**

**अनुग्रहश्च दानञ्च शीलमेतद् विदुर्बुधाः॥**

एवमेव प्रकारेण आचारवतां शीलसम्पन्नानां धर्मशास्त्रोक्तमानवीयमूल्यबोधानां विचारः क्रमशः क्रियते।

**संस्कारेषु-**

गर्भाधानादिसंस्कारद्वारा संस्कृतस्य जन्मनोऽनन्तरं मातापितृभ्यां पालितः शिशुः यथा- यथा वर्धते, तथा तथा सः स्वपितृमातृगुणान् सामाजिकांश्च गुणान् शिक्षयति। समयानुसारञ्च[6] षोडशादिभिः संस्कारैः स संस्कृतो भवति। गौतमोक्तचत्वारिंशत्संस्कारोपेतेषु सत्स्वपि आत्मगुणरहितेषु मानवीयमूल्यबोधस्य उपपत्तिः न भवति। ते च आत्मगुणाः अष्टसंख्याका इति गौतमोक्ताः भवन्ति। ते यथा-**''दयासर्वभूतेषु शान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति।''**[7] सूत्रस्यास्य टीकायां कथयति हरदत्तः-

**आत्मवत्सर्वभूतेषु यद्धिताय शिवाय च।**
**वर्तते सततं हृष्टः कृत्स्ना ह्येषा दया स्मृता॥**

**आक्रुष्टोऽभिहतो वाऽपि न क्रोशेन्न च ताडयेत्।**
**अदुष्टो वाङ्मनः कायैः सा तितिक्षा क्षमा स्मृता।**
**यो धर्ममर्थं कामं च लभते मोक्षमेव च।**
**न द्विष्यात्तं सदा प्राज्ञः साऽनसूया स्मृता बुधैः॥**

---

1. मनु. मन्वर्थः- 2/6
2. वाच. प्र. भा., पृ.- 631
3. मनु. मन्वर्थ- 2/6
4. मनु. मन्वर्थ- 2/6
5. महा. शान्ति., 126/66, 162/21
6. खादिरगृह्यसूत्रे षोडशसंस्काराः, गोभिलगृह्यसूत्रे एकविंशतिः, आश्वलायनगृह्यसूत्रे पञ्चदश, पारस्करगृह्यसूत्रे त्रयोदश, बौधायनगृह्यसूत्रे त्रयोदश, वाराहगृह्यसूत्रे त्रयोदश, वैखानसगृह्यसूत्रे अष्टादश, गौतमधर्मसूत्रे चत्वारिंशत्, बौधायनधर्मसूत्रे चत्वारः, आपस्तम्बधर्मसूत्रे सप्त, हारीतानुसारं दौ, अङ्गिरा च पञ्चविंशतिः, व्यासस्तु षोडश इत्यादयः संस्काराः शास्त्रकारैरूक्ता।
7. गौ. ध. सू., 1/8/24

**द्रव्यशौचं मनः शौचं वाचिकं कायिकं तथा।**
**शौचं चतुर्विधं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः।।**

**यदारम्भे भवेत्पीडा नित्यमत्यन्तमात्मनः।**
**तद्वर्जयेधर्म्यमपि सोऽनायासः प्रकीर्तितः।।**

**प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम्।**
**एतद्धि मङ्गलं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः।।**

**आपद्यपि च कष्टायां भवेद्दीनो न कस्यचित्।**
**संविभागरूचिश्च स्यात्तदकार्पण्यमुच्यते।।**

**विवर्जयेदसंतोषं विषयेषु सदा नरः।**
**परद्रप्याभिलाषं च साऽस्पृहा कथ्यते बुधैः।।**

दया हितचिन्तनम्। हरदत्तोक्तं मतमपि [1]मस्करी–[2]सूक्षमाकारौ समर्थयतः व्यासवचनमत्रोद्धृत्य यत्–

**क्षमावान् जयते भूमिं दयावान् सुखमश्नुते।**
**अनसूयुर्लभेत् स्वर्गं शौचेनाध्यात्ममेव च।।**

**मङ्गलादपि संपूज्यः इह लोके परत्र च।**
**सुर साम्यमनायासात् अकार्पण्यात् प्रकृतौ लयम्।।**

**अस्पृहो लभते नित्यमनन्तं सुखमेव च।**
**सर्वैस्तु ब्रह्मणः स्थानं संस्कारैस्तु तथैव च।।**

**एवं सर्वालाभे यथा लाभपरिग्रहोऽपि कर्त्तव्यः। पृथग्भूतस्यापि फलश्रवणात् ।।**

**तत्रैव कथयति गौतमः– यस्यैते चत्वारिंशत् संस्कारा न चाष्टावात्मगुणा न स ब्रह्मणस्सायुज्यं सालोक्यं च गच्छति[3],** यस्य तु पुरुषस्य एते आत्मगुणाः न सन्ति न स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति। ब्रह्मा नाम देवताविशेषः। सायुज्यमैकम् आत्म्यं सालोक्यं समानस्थानवासित्वम्। निन्दा च गुणस्तुत्यथैव प्राधान्यात् सायुज्यस्यैव।।

संस्काराः यद्यपि मानवस्य पितृमातृसम्बन्धीयानि एनांसि विनाशयन्ति, तथापि पितृमातृप्रदत्ताः देशजातिकुलसमाजात् शिक्षिताश्च संस्काराः मानवस्य मानवीयगुणान् विकासयन्ति मानवीयमूल्य–बोधांश्च संस्थापयन्ति। तेन मानवः असाराणामल्पसाराणां तत्वानां परित्यागं कृत्वा सारतत्वमेव गृह्णाति। यथोच्यते पुरूषार्थचतुष्टये ग्रन्थे–

---

1. गौ. ध. सू. (मस्करी), 1/8/25
2. गौ. ध. सू. (सूक्ष्मा), 1/8/25
3. गौ. ध. सू., 1/8/25

**असारमल्पसारञ्च सारं सारतरं त्यजेत्।**
**भजेत् सारतमं शास्त्रे रत्नाकर इवामृतमिति॥**[1]

**दशलक्षणके धर्मे-**

उच्चादर्शस्थापनद्वारा मानवीयमूल्यबोधस्य यथार्थोपपादनं भवतीति विपश्चितः प्रतिपादयन्ति। भगवता मनुना[2] दशलक्षणकस्य धर्मस्य प्रतिपादनावसरे एतदेव अभिप्रैति। स च दशलक्षणको धर्मः धृतिक्षमाद्युपेतः श्रुतिस्मृतिपरिभाषितश्च। वस्तुतः

**''धर्मो विश्वस्य जगतःप्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपानुदति धर्मे सर्वं प्रतिष्ठितं तस्माद् धर्मं परमं वदन्ति।''**[3]

इत्यस्मात् तैत्तिरीयारण्यकवचनात् धर्मेण मानवीयमूल्यबोधः प्रतिष्ठापितो भवति इति विज्ञायते।

**आश्रमेषु-**

आश्रमेषु मानवीयमूल्यबोधस्य पराकाष्ठा प्रतिपाद्यत इति धर्मशास्त्रस्यास्य वैशिष्ट्यम्। ब्रह्मचारी एतादृशं भिक्षाटनं कुर्यात् येन अन्येषामपि वृत्तिच्छेदो न भवेत्। अपि च [4]**''सार्ववर्णिक-भैक्षचरणमभिशस्तपतितवर्जमि''**त्युक्त्वा गौतमः आरम्भाश्रमादेव उच्चादर्शस्थापनाय प्रेरयति।[5] **आचार्याधीनत्वमान्तमिति** उक्त्वा गौतमः नैष्ठिकब्रह्मचारी आचार्याधीने स्थित्वा मानवीयमूल्यबोधस्य उच्चादर्शस्य च प्रतिष्ठापनं कथं कुर्यादिति प्रतिपादयति। उपकुर्वाणश्च ब्रह्मचारी गुरोस्सकासात् यत्र विद्याध्ययनं करोति तत्रैव गुरोर्सद्गुणानपि। यथोच्यते तैतिरीये गुरुमुखेन-**''यान्यस्माकं सुचरितानि तानि सेवितव्यानि नो इतराणिः''** इति। ते च सद्गुणाः अनन्तरवर्तिकाले गृहस्थजीवनं प्रथयति। गुहस्थाः शालिनयायावरादयः। गृहस्थानां कृते निर्दिष्टेषु कर्मसु पञ्चमहायज्ञादीनां साधनमन्यतमम्। तन्माध्यमेन देव-ऋषि-पितृ-अतिथिभूतानां कृते कथं त्यागः क्रियते, कथञ्च तेषां सम्मानसत्कारादिकं विधीयते। तच्च-

**श्राद्धकर्म तपश्चैव सत्यमक्रोध एव च।**
**स्वेषु दारेषु सन्तोषं शौचं नित्यानसूयता॥**
**आत्मज्ञानं तितिक्षा च धर्मः साधारणो ततः॥**[6] इति संस्कारसारे।

अनेन गृहस्थस्य सन्ततयोऽपि तादृशं मूल्यबोधं उच्चादर्शञ्च शिक्षयन्ति पालयन्ति च। गृहस्थाश्रमे तस्मिन् कृषिकर्मादिकं कथं कर्त्तव्यं कथमध्ययनाध्यापनादिकं भूतरक्षणं राज्यसेवादिकञ्च

---

1. पुरु- 34
2. मनु., 6/92-94
3. तै. आ.- 38
4. गौ. ध. सू., 1/2/38
5. गौ. ध. सू., 1/3/5
6. सं. सा., पृ.-33

कर्त्तव्यं, तेन च कथं मनुष्याणां न केवलमपि च इतरप्राणिनामपि उपकारो भवति तद् विज्ञायते। एतत्सर्वं मानवीयममूल्यबोधस्य निदर्शनमेव। यथोच्यते.....

**चतुर्गवं नृशंसानां द्विगवं गोजिघांसुवत्।**

**द्विगवं वाहयेत्पादं मध्यान्हे तु चतुर्गवम्।।**

**षड्गवं तु त्रियामाहेऽष्टभिः पूर्णं तु वाहयेत्।**
**नाप्नोति नरकेष्वेवं वर्त्तमानस्तु वै द्विजः।।**[1]

तत्रापि गृहस्थः आपत्काले शीलोञ्छवृत्याऽपि जीवेत् न तु स्वधर्मं परित्यजेदिति मनुः कथयति। तद्यथा–

**ऋतामृताभ्यां जीवेत्तु मृतेन, प्रमृतेन वा।**

**सत्यानृताभ्यामपि वा न श्ववृत्या कदाचन।।**[2] इति।

वानप्रस्थः वन्याहारेण यत्र जीवननिर्वाहं कुर्यादित्युच्यते तत्रैव न सर्वाणि संगृह्णीयात् भुज्येत वा, अपि च बीजवधं नैव कृत्वा पुनर्प्ररोहनिमित्तं किञ्चिद् भूमौ निक्षिपेत्, यच्चान्येषां वानप्रस्थानामथ च प्राणिनामपि कृते पुनर्प्ररोहानन्तरं संग्रहणे सहायकं भवेत्। सन्यासी च सर्वेषां हितं कामयन् स्वकालं यापयेत् इति उक्त्वा धर्मशास्त्रकाराः ''सर्वे भवन्तु सुखिनः'' इति वचनं समर्थयन्ति। यच्च मानवीयमूल्यबोधस्य उच्चादर्शस्य च परिचायकं भवति। **''प्रजासुखे सुखं राज्ञः प्रज्ञानां च हिते हितम्''**[3] इति उक्त्वा कौटल्यः राज्ञोऽपि मानविकमूल्यबोधस्य पराकाष्ठां प्रतिपादयति। ईष्टापूर्तिः पूर्तनिर्माणं च राज्ञ अन्यतमे कार्ये भवतः। एताभ्यां समेषां लोकानां प्रजानां च हितं भवति। तदुच्यते कालिकापुराणे–

**इष्टापूर्त्तौ स्मृतौ धर्मौ श्रुतौ तौ शिष्टसम्मतौ।**

**प्रतिष्ठाद्यं तयोः पूर्त्तमिष्टं यज्ञादिलक्षणम्।।**

**भूक्तिमुक्तिप्रदं पूर्त्तमिष्टं भोगार्थसाधनम्।।**[4] इति

अन्यकल्याणं वस्तुतः आदर्शयुक्तं भवति। अनेन मानविकमूल्यबोधः संस्थाप्यते, यथोच्यते ''आत्मनः प्रतिकूलानि परेषां न समाचरेदिति''। वस्तुतः

**उपकाराय लोकस्य त्रिवर्गस्थापनाय च**

**नवनीतं सरस्वत्या बुद्धिरेषा प्रभाविता।।**

---

1. परा. स्मृ., 2/9-10
2. मनु., 4/4
3. कौ. अ. शा., 1/19/39
4. सं. सा., पृ.- 32

इत्यस्मात् महाभारतीयवचनात् सर्वेऽपि लोकानामुपकाराय प्रयतन्त इति मनुष्यस्य विशिष्टो गुणो भवति। स च-

**ऋृतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्।**
**मृतं तु याचितं भैक्षं, प्रमृतं कर्षणं स्मृतम्॥''**[1] इति

मनुष्यः अन्येभ्यः भिन्नः। चथोच्यते ''पुरुषे चाविस्तरात्मा स हि प्रज्ञानेन सम्पन्नाः, विज्ञातं वदति, विज्ञातमेव पश्यति पशवः न विज्ञातं पश्यन्ति न च विज्ञातं वदन्ति इति।

अन्ततो मानवः परोपकाराय एव मानवीयमूल्यबोधस्य च प्रतिपादनाय सृष्टः। तदतिरिक्तं सर्वमसारम्।

1. मनु., 4/5

# वर्तमानसन्दर्भे भारतीयदर्शनस्योपयोगिता

**डॉ. सच्चिदानन्दस्नेही**

**येनेरिताः प्रवर्तन्ते प्राणिनः स्वेषु कर्मसु।**
**तं वन्दे परमात्मानं स्वात्मानं सर्वदेहिनाम्॥**
**यस्य पादांशुसम्भूतं विश्वं भाति चराचरम्।**
**पुर्णानन्दं गुरुं वन्दे तं पूर्णानन्दविग्रहम्॥**[1]

भारतीयदर्शनानामुपयोगिता तेषां तत्त्वमीमांसायां, प्रमाणमीमांसायां, ज्ञानमीमांसायां, नीतिमीमांसायाञ्च सन्निहिताः वर्तन्ते। भवन्तः जानन्ति एव यत् **भारतीयदर्शनं द्विधा विभज्यते। 1. आस्तिकंवैदिकम् वा 2. नास्तिकंअवैदिकम्वा।** भारते नास्तिकास्तिकभेदेन परस्परं भेदापन्नानि तानि दर्शनानि सन्ति नवविधानीति। तेषु न्यायवैशेषिकसांख्ययोगपूर्वमीमांसोत्तरमीमांसेति षड् आस्तिकदर्शनानि सन्ति। तथा च चार्वाकजैनबौद्धाश्चेति (वैभाषिकमाध्यमिकयोगाचारसौत्रन्तिकाश्च) त्रीणी नास्तिकदर्शनानि सन्ति। **'नास्तिको वेदनिन्दकः**[2]**'** इति विचारेण नास्तिकपदेन वेदविरोधित्वं गृह्यते। तथा च वेदसमर्थकानि दर्शनानि आस्तिकपदेनोच्यते।वस्तुतः वेदेषु एव भारतीयदर्शनं बीजरूपं स्थितं वर्तते। सम्पूर्णमपि भारतीयदर्शनं वेदे एवान्तर्भूतमस्ति। वेदविरोधिचार्वाकजैनबौद्धदर्शनेष्वपि वैदिकतत्त्वानामेव प्रत्यक्षाप्रत्यक्षरूपेण प्रभावो परिदृश्यते।

आधुनिकयुगं यन्त्रप्रधानयुगमस्ति। यद्यपि विविधवैज्ञानिकयन्त्राणां विनियोगकारणेन मानवजीवने सौख्यं वर्धितं परञ्च तथापि मानवस्य जीवने व्यक्तिगत-पारिवारिकसामाजिक-दैशिकस्तरे नानाविधदुःखानिसन्ति एव। तेभ्यः दुःखेभ्यः विमुक्त्यर्थं भौतिकसुखकामनापूर्त्यर्थञ्च जनाः अधिकाधिकं धनं संचयति, भौतिकसुखसाधनानां परिग्रहोऽपि कुर्वन्ति। ननु लोके दृष्टोपायेनापि दुःखनिवृत्तिर्दृष्टा तर्हि किमर्थं दुःखनिवारणाय तत्त्वज्ञानं दर्शनं वापेक्ष्यते? समाधात्ते-आधिभौतिक-आधिदैविक-आध्यात्मिकेति तापत्रयेभ्यः रोगादिनानाविधदुःखेभ्यः काचनमणिमन्त्र-भैषज्याद्युपायेनलोके सर्वत्रदुःखनिवृत्तिर्दृष्टा, परञ्चन सा एकान्तिकी आत्यन्तिकी दुःखनिवृत्तिः।यथोक्तं सांख्यकारिकायां-

**दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ।**
**दृष्टे साऽपार्था चेन्नैकान्तात्यन्तोऽभावात्॥**[3]

---

1. केनोपनिषद्तः, ईशादि नौ उपनिषद्, शाङ्करभाष्यार्थहिन्दीव्याख्योपेता, गीताप्रेसगोरखपुरतः।
2. मनुस्मृति 2.11
3. सांख्यकारिका, का.सं. 1

तर्हि कथं पारमार्थिकी दु:खनिवृत्ति:? किं वा आनुश्रविकोपायेनापि दु:खस्यैकान्तिकी आत्यन्तिकी निवृत्तिरूक्ता:, किमर्थं तन्न स्वीक्रियते?उक्तम्–**'दृष्टवदानुश्रविक: स ह्यविशुद्धि- क्षयातिशययुक्त:'**[1]**।** सम्यक्दर्शनेन, तत्त्वज्ञानेन, विवेकज्ञानेन वा कैवल्यम्। किं नाम दर्शनं येन दु:खेभ्य: पूर्णतयानिवृत्तिर्सभवेत् ? दृश्यते प्रेक्ष्यतेज्ञायतेऽनेन इति दर्शनम्। 'दृश्'धातो: ल्युट्प्रत्ययेन निष्पन्नोऽयं दर्शनशब्द: दृश्यतेऽनेनेति व्युत्पत्त्या आत्मसाक्षत्कारसाधनं तत्त्वज्ञानकरणं वा भवतीति।जीवनेऽभ्युदयस्य सुखस्य पथप्रदर्शकं दर्शनशास्त्रमेवास्ति। यथोक्तंदर्शनस्य लक्षणं–

**यदाभ्युदैयिकं चैव नैश्रेयसिकमेव च।**
**सुख साधयितुं मार्गं दर्शयेत्तद्धि दर्शनम्।।**

मनुष्य: नि:सर्गत एव मननशील: यतो हि मत्वा कर्माणि करोति। यदा स वैषयिकसुखेन विरक्तो भवति तदा स चिन्तयति–कोऽहं? कुतोऽहं? सर्वतो दृश्यमानस्यास्य जगत: किं सत्यं स्वरूपम्? अस्य जगत उत्पत्ति: कथम्? सृष्टे: कारणं किम्? को नाम बन्ध:? अस्य कथं विमोक्ष:? परम: क: आत्मा? क: अनात्मा? तयोर्ज्ञानं कथं भविष्यति? ईदृशानां प्रश्नानां वा समुचितानि समाधानानि दर्शनेन एव लब्धुं शक्यते। यतोहि दर्शनमेव एहिलौकिकपारलौकिकप्रश्नानां समुचितं युक्तियुक्तं च समाधानाय समर्थोऽस्ति।दर्शनेनैव मानवस्योत्पत्तिस्थितिलय–विषयकानामनेकानां जिज्ञासामुत्तरं प्राप्यते। एतादृशचिन्तनमननफलस्वरूपमेव सकलमिदं दर्शनशास्त्रम्। यथोक्तं याज्ञवल्क्यमैत्रियिसंवादे–

**आत्मा वाऽरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति।**
**आत्मनो वाऽरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विज्ञातम्भवति**[2]**।**

महर्षियाज्ञवल्क्यस्येदं चिन्तनमेव भारतीयदर्शनस्य मूलाधारं वर्तते। पुरूषार्थचतुष्टयेषु अन्यतमस्य मोक्षस्य स्वरूपज्ञानं, तस्यापवर्गस्य सिद्धिश्च तत्त्वज्ञानेन सम्यक्दर्शनेनैव भवितुमर्हति। सा च सिद्धि: सम्यक्ज्ञानेन श्रवण–मनन–निदिध्यासनेनैव सम्भवति। यथोक्तं–

**श्रोतव्य: श्रुतिवाक्येभ्य:, मन्तव्यश्च उपपत्तिभि:।**
**मत्वा च सततं ध्येयं, एते दर्शनहेतव:।।**

दर्शनशब्दस्य आंग्लभाषान्तरणं **'फिलॉसाफी'**(Philosophy) इति स्वीक्रियते। शब्दोऽयं **( फिलास्+सोफिया )** इति ग्रीकभाषाया: शब्दाभ्यां निष्पद्यते। ग्रीकभाषायां **'फिलास्'** शब्दस्यार्थो प्रेमानुरागो वा **'सोफिया'** इति शब्दस्यार्थ: विद्याप्रदायिनी देवी च स्वीक्रियते। एवं रूपेण पाश्चात्यजगति दर्शनशब्दस्यार्थो भवति–**'ज्ञानं प्रत्यनुरागेति'**। अत: पाश्चात्यानां मते दर्शनस्योद्देश्यं केवलं बौद्धिकोन्नयनं ज्ञानोन्नयनं वा वर्त्तते, परञ्च भारतीयानां मते दर्शनस्योद्देश्यमात्मसाक्षात्कारेण तत्त्वज्ञानेन वापवर्गप्राप्तिर्वर्तते। स चापवर्ग: भारतीयदर्शने द्विविध: (1.) दु:खात्यन्तनिवृत्तिस्वरूपम्[6] (2.)आनन्दावाप्तिस्वरूपं च[7]। न्यायवैशेषिकसांख्ययोगादिदर्शने आधिभौतिक–आधिदैविक–आध्यात्मिकानामिति जन्ममरणचक्र–सन्तप्यमानानां जीवानाम् त्रिविधतापेभ्य: एकान्तिकी आत्यन्तिकीनिवृत्तिरेव मोक्ष:। मीमांसावेदान्तादिदर्शनेषु

1. सांख्यकारिका, का.सं. 2
2. बृहदारण्यकोपनिषद् 2/4/5

दु:खनिवृत्तिसहितं निरतिशयानन्दस्वरूपं मोक्षः, तदुक्तं वेदान्तदर्शने–'सच्चिदानन्दं ब्रह्म', 'ब्रह्मभावश्च मोक्ष:'। तत्त्वज्ञानेन कथं विमोक्ष:? उक्तं न्यायसूत्रकारैः–**'दु:खजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुरोत्तरापाये तदनन्तरापायादपवर्ग:'।** केन मार्गेण मोक्षं सिद्धयेदिति जिज्ञासायामुक्तं जैनदर्शने **'सम्यक्ज्ञान-दर्शनचरित्राणि मोक्षमार्ग:'।** सम्यक्दर्शन–सम्पन्नः निष्कामकर्मयोगीवत् भवति। यथोक्तं मनुस्मृतौ–

**सम्यक्दर्शनसम्पन्नः कर्मभिर्न निबद्धयते।**

**दर्शनेन विहीनस्तु संसारं प्रतिपद्यते।।**[3]

भारतीयदर्शनेषु न्यायदर्शनस्यात्यन्तं महत्त्वं वर्तते। यतो हि **'प्रमाणैरर्थपरीक्षणं न्याय:'**इतिव्युत्पत्तिमवलम्ब्यन्यायदर्शनस्य स्वरूपमेवनिर्णयविज्ञाने परिवर्तितं, यस्य आधुनिकन्यायतंत्रे बहुधा प्रयोगं दृश्यते। ( It is a Science of getting true knowledge by valid means or Science of reasoning and Judgement. ) युक्तियुक्तं निर्णयाय तर्कशास्त्रं कथमुपयुक्तमिति तु न्यायशास्त्रमस्मान् अध्यापयति। निर्णयस्य वैज्ञानिकप्रक्रियात्मकमध्ययनमेव न्यायशास्त्रमिति।

न्यायशास्त्रस्य लौकिकजीवने महत्ती उपयोगितापिविद्यते, यतो हि न्यायशास्त्रं प्रमाणशास्त्रं तर्कशास्त्रं चाप्युच्यते। **'नीयते प्राप्यतेअर्थोऽनेनेति'**इति व्युत्त्पत्या न्यायशास्त्रेतराणियानि व्याकरण-वेदान्तप्रभृतीनि शास्त्राणि सन्ति तानि सर्वाण्येव शास्त्राणि, न्यायशास्त्रसमपेक्षमाणानि सन्ति। सेयं विद्या प्रशंसिता–

**आर्ष धर्मोपदेशञ्च वेदशास्त्रविरोधिना।**

**यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः।।**[4]

तेषां सर्वथोपकारकत्वेन न्यायशास्त्रमपेक्षन्ते इति। यथोक्तम्–**'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्'**[5]**।** न्यायदर्शनमेव आन्वीक्षिकीविद्या इति। अत एव जयन्तभट्टेनोच्यते– **'इयमेवान्वीक्षिकी चतसृणां विद्यानां मध्ये न्यायविद्या गण्यते। यथोक्तं–'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती'**[6]**।** प्रत्यक्षागमाभ्यामीक्षितस्य अन्वीक्षणमन्वीक्षा–'अनुमानम्', तद्व्युत्पादकं शास्त्रमान्वीक्षिकम्। आन्वीक्षिकीविद्यायाः महत्त्वं प्रतिपादयन् आह न्यायभाष्यकार:–

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।**

**आश्रयः सर्वधर्माणां सेयमान्वीक्षिकी मता।।**[7]

सेयं प्रमाणमीमांसाया उपयोगिता मानवस्योत्पत्तिकालादेव तस्य मृत्युपर्यन्तं वर्तते। प्रमाणमीमांसायाः महत्त्वं क:न जानाति? **'मानाधीनाः मेयसिद्धिः', 'लक्षणप्रमाणाभ्यामेव वस्तुसिद्धिर्वा'** इत्यादेः

1. 'त्रिविधदु:खात्यन्तनिवृत्तिरत्यन्तपुरूषार्थ:' सांख्यसूत्रम्।
2. 'सच्चिदानन्दं ब्रह्म', 'ब्रह्मभावश्च मोक्ष:'। शाङ्करभाष्यम्, वेदान्तसूत्रम्।
3. मनुस्मृति 6.74
4. न्यायभाष्यभूमिकातः ।
5. न्यायभाष्यभूमिकातः ।
6. न्यायभाष्यभूमिकातः ।
7. न्यायभाष्यभूमिकातः ।

लोकप्रसिद्धित्वात् सिद्धमेव यत् जनाः प्रामाणिकं ज्ञानमेवाभिलषन्ति।प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्ति-सामर्थ्यादर्थवत्प्रमाणमिह खलु प्रेक्षापूर्वकारिणोऽर्थिजनाः सर्वपुरूषार्थसिद्धि-निमित्तं प्रमाणमेवानुसरन्ति। प्रमाणमन्तरेण नार्थप्रतिपत्तिः, नार्थप्रतिपत्तिमन्तरेण प्रवृत्तिसामर्थ्यम्। प्रमाणेन खल्वयं ज्ञातार्थमुपलभ्य तमर्थमभीप्सति जिहासति वा। अतः सर्वेषु दर्शनेषु प्रमाणस्वरूपं प्रतिपाद्यते। प्रमाणानुकूलप्रवत्त्यर्थं प्रमाणमीमांसापेक्षिता। प्रमाणस्वरूपावज्ञानाय दर्शनमेवोपयोगीति।

भारतीयदर्शने अनेकेषु स्थलेषु प्रतिपादितः कार्य[1]-कारण[2]सिद्धान्तः (Theory of cause andeffectiveness)न केवलं दर्शनेषु अपितु लोकेऽपि सुप्रसिद्धः दार्शनिकसिद्धान्तः यस्योपयोगः मानवजीवने प्रत्येकस्मिन्निर्णये अन्वेक्षणात्मकगतिविधौ च बहुधा दृश्यते। यथा-चिकित्साशास्त्रे रोगानां कारणान्वेषणे तन्निवारणोपाये च, आरक्षकैः, वैज्ञानिकैः, शोधार्थिभ्यश्च स्वकीयानुसन्धाने। सर्वतन्त्रसिद्धान्तरूपेण पंचमहाभूतसिद्धान्तः[3](Theory of five mega elements)एपंचज्ञानेन्द्रियाणां सिद्धान्तः[4](Theory of five senses)ए तेषां पंचविषयाः[5] (Theory of five sense objects)इत्यादय अन्यत्र नृविज्ञानमनोविज्ञानादिविषयेषु सर्वथा अङ्गीक्रियन्ते। मनोविज्ञानस्य विवेच्यविषयाणां यथा मन[6]-बुद्धि[7]-अहंकारादिना[8] सुविस्तृतं विवेचनं भारतीयदर्शने प्राप्यते। प्रथमदृष्ट्या सम्प्रति आधुनिकमनोविज्ञानस्याधारभूतं यज्ज्ञानं तद् भारतीयदर्शनेन पूर्णतया प्रभावितं दृश्यते। अतः आधुनिकमनोविज्ञाने भारतीयदर्शनस्य कियत् प्रभावो वर्तते इत्यपि अन्वेषणस्यविषयो वर्तते।

पूर्वमीमांसादर्शनं वैदिकव्याख्यानाय धर्मशास्त्रे प्रवर्त्तनायापेक्ष्यते। यतोहि मीमांसादर्शनं वैदिकवाक्यानां पूर्णतया वैज्ञानिकं युक्तियुक्तञ्च व्याख्यानं प्रस्तौति। यज्ञसम्पादनाय प्रायोगिकं प्रक्रियात्मकं मार्गमपि प्रदर्शयति।वेदान्तदर्शनस्य सृष्टिप्रक्रियाप्रतिपादकं पंचीकरणसिद्धान्तः, पंचकोशसिद्धान्तश्च जीवने चेतनाविषयकजिज्ञासानां वैज्ञानिकं विवेचनं प्रदर्शयति। अतः जीवनस्य सृष्टिप्रक्रियाज्ञातुमस्य महती उपयागिता वर्तते। समाजे सामाजिकसद्भावनाविनिर्माणेऽपि वेदान्तस्य महती भूमिका वर्तते। यतो हि तत्र सर्व खल्विदं ब्रह्मेति दर्शयित्वाजनाः समदर्शिनः भूत्वा स्थितप्रज्ञवदाचरन्ति। यथोक्तं भगवद्गीतायां-

**समः शत्रौ च मित्रे च तथा मानापमानयोः।**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः॥**[9]

---

1. यस्य कारणात् पश्चात् भावो नियतो अनन्यथासिद्धश्च तत् कार्यम्। न्या.त.भा. केशवमिश्रप्रणीतम्,चौ.सं.सं. वाराणसी।
2. यस्य कार्यात् पूर्व भावो नियतो अनन्यथासिद्धश्च तत् कार्यम्। न्या.त.भा. केशवमिश्र प्रणीत, चौ.सं.सं.वाराणसी।
3. पृथिव्यापस्तेजो वायुराकाशमिति भूतानि। न्यायसूत्रम् 1.1.13।
4. घ्राणरसनचक्षुस्त्वक्श्रोत्रणीन्द्रियाणि भूतेभ्यः। न्यायसूत्रम् 1.1.1.2।
5. गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः । न्यायसूत्रम् 1.1.14।
6. युगपज्ज्ञानानुत्पतिर्मनसो लिंगम्। न्यायसूत्रम् 1.1.16।
7. बुद्धिरूपलब्धिार्ज्ञानमित्यनर्थान्तरम् । न्यायसूत्रम् 1.1.15।
8. अभिमानोऽहंकारः । सांख्यसूत्रम्।
9. भगवद्गीता 12/18

**अद्वेष्टा सर्वभूतानां मैत्रः करूण एव च ।**

**निर्ममो निरहङ्कारः सर्वदुःखसुखः क्षमी॥[1]**

शारीरिकमानसिकव्याधिपिडिते आधुनिकयुगेयोगशास्त्रस्य उपयोगिता जीवने कः न जानाति? मानवस्य शारीरिकमानसिकतापशमनाय योगशास्त्रमपेक्ष्यते। यादृशी व्यवहारिकी उपयोगिता योगदर्शनस्य तादृशी न कस्यापि दर्शनस्य। 'योगश्चित्तवृत्तिनिरोधः' इति योगलक्षणमधीयतेऽत्र, 'यम-नियम-आसन-प्रणायाम-प्रत्याहार-धारणा-धयान-समाधयश्चेति' अष्टौ योगाङ्गानि। योगासनेन न केवलं शारीरिकमानसिकमारोग्यं लभ्यते वरन् योगाङ्गानुष्ठानादेव विवेकख्यातेः कैवल्यमपि प्राप्नोति।अतः योगदर्शनस्य ऐहिलौकिकी पारलौकिकी उपयोगिताश्च सिद्धमेव।

उपनिषत्सु यत् दर्शनं तत् सर्वेषां सर्वतो उपकाराय प्रवर्तते। तथा च भारतीयदर्शमुपनिषत्सु एव निहितं वर्तते।भारतीयदर्शनस्य तत्त्व-ज्ञान-नीतिमीमांसानाञ्च मूलमुपनिषत्सु एव। उपनिषदो भारतीयजीवनदर्शनस्य ज्वलन्ति रत्नानि। महर्षिभिः यानि आध्यात्मिकतत्त्वानि जीवनदर्शनञ्च ज्ञानदृष्ट्या साक्षदकुर्वन् तानि सर्वाणि तत्त्वानि अत्र वर्णितानि। उपनिषदो सरससरलशैल्यां तत्त्वं ग्राहयन्ति। अतः तासां महत्त्वं लोकप्रियत्वं चानुदिनमवर्धत।

लोके सम्प्रति जनाः केवलं चार्वाकदर्शनानुसम्मतं भौतिकवादमवलम्ब्य अधिकाधिकधनपरिग्रहार्थं प्रवर्तन्ते। यथोक्तं लोकायतैः-

**यावज्जीवेत्सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत्।**

**भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥[2]**

**'यस्यास्ति वित्तं स नरः कुलीनः'** इति सिद्धान्तमवलम्बमानाः जनाः धनहीनं तृणं मन्यन्ते। अस्ति धनस्य महात्म्यं जीवने नास्ति अत्र कश्चिद् संशयः, परञ्च भारतीयदर्शनेषु उपनिषत्सु च यज्जीवनदर्शनं तत् तु धनस्य आध्यात्मिकज्ञानं प्रति न्यूनतां सिद्धयति। कठोपनिषदि वित्तलिप्सा-विषये प्राह-**'न वित्तेन तर्पणीयो मनुष्यो'**। यथोक्तं बृहदारण्यकोपनिषदः मैत्रेयी याज्ञवल्क्यसंवादे-**'येनाहं नाऽमृता स्यां किमहं तेन कुर्याम्'?** पुरूषार्थचतुष्टयेषु धर्मार्थकाममोक्षेषु सर्वेषु सामन्जस्येन प्रवृत्तिर्भवितव्या यतो हि तया प्रवृत्त्या एव निःश्रेयसस्य प्राप्ति दर्शनेषु उक्ता। न तु केवलेन धनेन।अतः जीवनदर्शनस्य मूलमुक्तम् ईशवास्योपनिषदि-**'तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्'[3]।**

जीवने कथमाचरणीयमिति भारतीयदर्शमेव उपदिश्यते। कणादवचनानुसम्मतेन- **'यतोऽभ्युदय-निःश्रेयससिद्धिः सः धर्मः'** इति सूत्रमवलम्ब्य धार्मानुकूलमाचरेत्। जैनदर्शनस्य **'सम्यक्ज्ञानदर्शन-चरित्राणीति'** त्रीणि रत्नानि, **'सत्याहिंसास्तेयब्रह्मचर्यापरिग्रहश्चेति'** व्रतपंचकं, बौदर्शनस्याष्टाङ्गिकमार्गं वा परिपालयेत्। जीवनदर्शनस्य प्रतिबिम्बस्वरूपं वैदिकदीक्षान्तोपदेशस्तूक्तं तैतितरीयोपनिषदि-तदित्थं-''**सत्यं**

1. भगवद्गीता 12/13
2. सर्वदर्शनसंग्रहः, लोकायतदर्शनम्।
3. ईशा वास्यमिदं सर्व यत्किञ्च जगत्यां जगत्।
   तेन त्यक्तेन भुञ्जीथा मा गृधाः कस्यस्विद्धनम् ॥ ईशवास्योपनिषद्तः, मन्त्र सं0 1, ईशादि नौ उपनिषद्, शाङ्कर भाष्यार्थहिन्दीव्याख्योपेता, गीताप्रेस गोरखपुरतः।

**वद। धर्मं चर। स्वाध्यायान्मा प्रमदः.........मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि। तानि सेवितव्यानि। नो इतराणि। यान्यस्माकं सुचरितानि । तानि त्वयोपास्यानि। नो इतराणि।**[1]''

अतः कामं, क्रोधं, वित्तस्य लोभञ्च त्यक्त्वा ज्ञानं प्रति गच्छ, यतो हि तत्र ज्ञानकर्ममार्गयोः समन्वयेनैव दुःखनिवृत्तिः सुखसाधनत्वञ्च सिद्धयति–'**अविद्याया मृत्युं तीर्त्वा विद्ययामृतमश्नुते**'। भगवद्गीतायां यदुक्तं ज्ञान–कर्म–भक्तियोगञ्च, तदवदाचरणीयम्। भगवद्गीतायां मुख्यतः प्रतिपादितस्य निष्कामकर्मयोगस्य मूलं ईशोपनिषदि[2] प्राप्यते–'**कुर्वन्नेवेह कर्माणि, जिजीविषेच्छतं समाः**'। जीवनोपदेशः कठोपनिषदि उक्तमुद्बोधनरूपेण–'**उत्तिष्टत् जाग्रत प्राप्य वरान्निबोधत्**'[3]। '**वसुधैव कुटुम्बकमिति**' मनसि निधायजनकल्याणाय प्रवर्तयेत्। **यथोक्तं** विश्वबन्धुत्वस्योपदेश ईशोपनिषदि –

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।**
**सर्वभूतेषु चात्मानं, ततो न विजुगुप्सते।।**[4]

सारांशतः जीवनदर्शनस्य संदर्भे भारतीयदर्शनस्य वैशिष्टयमुपयोगिताश्च आध्यात्मप्राध्यान्यत्वात्, धर्मपोषकत्वात्,वेदप्रामाण्यात्,दुःखविनाशकत्वात्, कर्मफलस्यानिवार्यत्वात्, पुनर्जन्मस्वीकरणत्वात्, चारित्रिकोन्नतेर्मार्गदर्शनत्वात्, मोक्षस्य जीवनलक्ष्योपदेशात्, विचारस्वातन्त्र्यत्वात्, व्यापकमीक्षणत्वात्, अनुभूतिमूलकत्वात्, विवेचनप्रधानात्, समाजोत्थापनभावनाप्रधानात्, सर्वतत्त्वसमन्वयाच्च वर्तते। अस्तु–

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामया।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्।।**[5] अज्ञातकर्तृक।

---

1. कृष्णयजुर्वेदीयतैत्तिरीयोपनिषद्स्य शिक्षावल्यामेकादशोऽनुवाकः, वैदिकसूक्तसंग्रहः, हिन्दीव्याख्योपेता, गीताप्रेस गोरखपुरतः।
2. कुर्वन्नेवेह कर्माणि, जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति, कर्म लिप्यते नरे।।ईशोपनिषद्भगात् मन्त्र सं. 2, ईशादि नौ उपनिषद्, शाङ्करभाष्यार्थहिन्दीव्याख्योपेता, गीताप्रेस गोरखपुरतः।
3. कठोपनिषद्तः, मन्त्र सं0 14, ईशादि नौ उपनिषद्, शाङ्करभाष्यार्थहिन्दीव्याख्योपेता, गीताप्रेस गोरखपुरतः।
4. ईशोपनिषद्भगात् मन्त्र सं0 6, ईशादि नौ उपनिषद्, शाङ्करभाष्यार्थहिन्दीव्याख्योपेता, गीताप्रेस गोरखपुरतः।
5. तत्रैव

# भारतीय संस्कृति और समाज : एक समीक्षा

**डॉ. पी. के. पण्डा**

संस्कृत साहित्य प्राचीन से लेकर वर्तमान तक राष्ट्र एवं समाज का चिन्तन करता रहा है क्योंकि साहित्य और समाज का अविनाभाव सम्बन्ध होता है, साहित्य में सामाजिक चित्तवृत्तियों या मनोवृत्तियों की स्वाभाविक महक प्राप्त होती है। यह साहित्य समाज एवं सभ्यता का प्रधान वाहक होता है। इसके माध्यम से समाज एवं सभ्यता अपने समुन्नत स्थान को प्राप्त होती है क्योंकि साहित्य जो उपदेश देता है वह कान्ता के समान सुन्दर और मधुर होता है। भारतीय संस्कृति और समाज की अविरल धारा जो अपने आरम्भिक काल में व्यवहृत हुई उसका नेतृत्व भारतीय संस्कृत साहित्य पूर्ण एवं स्वस्थ रूप में आज भी करता आ रहा है। साहित्य में भारतीय समाज और राष्ट्र की आदर्श संहिता वैदिक वाङ्मय से लेकर आधुनिक संस्कृत काव्यग्रन्थों में भी देखी जाती है। ऋग्वेद में मन्त्र द्रष्टा ऋषियों ने एक सुसंगठित समाज का निर्माण राष्ट्रीय परिप्रेक्ष्य में करते हुए कहा है–

**संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्।**
**देवा भागं यथापूर्वे संजानाना उपासते।।**

**समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्।**
**समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि।।**

**समानी वा आकूतिः समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति।।**[1]

अर्थात् हमारा सम्पूर्ण समाज साथ-साथ चले, साथ-साथ एक दूसरे के मनोनुकूल वार्ता (व्यवहार-क्रियाकलाप) को स्थापित करे। सब की (मन्त्रणा) विचार समान हों, समितियाँ में समान अधिकार हो सबका अर्थात् सब की समिति पर पूर्णतः विचार-विमर्श हो। यह बात ऋग्वेद के सामनस्य सूक्त की है जो सर्वप्रथम अथर्ववेद में बाद में संगठन सूक्त में यथावत बतलायी गयी है क्योंकि जब समाज निर्मित एवं विकसित होता है तो राष्ट्र स्वयं विकसित और निर्मित जाता है।

अथर्ववेद के **संगठन सूक्त** में मन्त्रद्रष्टा ऋषि ने समाज के उत्कृष्ट संरचनात्मक स्वरूप को व्यवस्थित किया है जिसका अनुपालन यदि आज भी प्रत्येक वर्ग के व्यक्ति द्वारा किया जाय तो निश्चितरूपेण एक उत्कृष्ट राष्ट्र और समाज का निर्माण सम्भव है। ऋषि का कथन है–

---

1. ऋ॰ 10.191.204 अथर्व॰ 6.64.1-3

**अनुव्रतः पितुः पुत्रो माता भवतु संमनाः।**
**जाया पत्ये मधुमतीं वाचं वदतु शान्तिवान्॥**
**मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा।**
**सम्यञ्चः सव्रताः भूत्वा वाचं वदत भद्रया॥**[1]

अर्थात् पुत्र पिता का आज्ञाकारी हो तथा माता के प्रति श्रद्धा रखने वाला हो। पत्नी मधुर भाषिणी होनी चाहिए तथा पति को भी शान्त और मधुर व्यक्तित्व वाला होना चाहिए। भाई-भाई के साथ, बहन-बहन के साथ तथा भाई और बहन आपस में द्वेष (ईर्ष्या) कभी न करें (समानता के सम्बन्ध का पालन करते हुए भद्र (कल्याणकारक) वाणी परस्पर बोलें। इससे सुन्दर समाज और राष्ट्र के निर्माण का उदाहरण और क्या हो सकता है? हम सबको इस बात पर ध्यान देने की आवश्यकता है जिसको समाज और राष्ट्र सुरक्षित हो सकता है। इसी प्रकार राष्ट्र के कल्याण की बात यजुर्वेद में बतलायी गयी हैं। मन्त्र द्रष्टा ऋषि परमात्मा से प्रार्थना करता है कि हमारा राष्ट्र सब प्रकार से सुसम्पन्न और समृद्धशाली हो-

**ऊँ आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम दोग्ध्री धेनूर्वोढानडवानाशुः सप्तिः पुरन्धिर्योषा जिष्णूरथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायताम्॥**[2]

अर्थात् हमारे राष्ट्र में लोग ब्रह्मवर्चसीं, कुशलं, शत्रुओं को परास्त करने में सक्षमं, गाय दूध देने वाली, बैल भार वहन करने वालें, घोड़े शीघ्रगामी एवं स्त्रियाँ सर्वगुण सम्पन्न हों तथा रथी, महावीर, जयशील, पराक्रम करने वाला तथा सभ्य युवा पुत्र उत्पन्न हों। इस प्रकार वेदों में राष्ट्र एवं समाज के निर्माण की बात स्पष्ट्र रूप से विभिन्न स्थलों पर कही गई हैं। वेदों के पश्चात्, ब्राह्मणों, आरण्यकों एवं उपनिषदों में भी यही भावनाएँ अभिव्यक्त हुई हैं। तैत्तिरीयोपनिषद् में कहा गया है-

**''सत्यं वद। धर्मं चर। स्वाध्यान्मा प्रमदः। आचार्याय प्रियां धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। मातृ देवो भव, पितृ देवो भव, आचार्य देवो भव, अतिथि देवो भव।''**[3]

ये सब बातें एक सभ्य और उच्च सुशिक्षित समाज की संरचना की नींव हैं इस पर अमल किया जाय तो निश्चयेन एक सभ्य समाज और राष्ट्र निर्मित हो सकता है। आज समाज एवं राष्ट्र में व्याप्त विसंगतियाँ निश्चित दूर हो सकती हैं। यही बातें रामायण, महाभारत, पुराणों, स्मृतियों से होती हुई भास, भवभूति, कालिदास, माघ, भारवि आदि महाकवियों के ग्रन्थों में प्रतिफलित दिखाई पड़ती हैं। पण्डित जवाहरलाल नेहरु जी ने अपने अभिभाषण में कहा है कि-

"If I was asked what is the greatest treasure which India possesses and what is her finest heritage, I would answer unhesitatingly it is the Sanskrit language and literature and

1. अथर्व०-3.30.2
2. यजुर्वेद 22.22
3. तैत्तिरीयोपनिषद्-बल्ली 1, अनुवाक 11

all that is contains. This is magnificent inheritance and so long as this endures and influence the life of our people so long the basic genius of India will continue."[1]

वैदिक वाङ्मय के उपरान्त कालिदास आदि के काव्यों में वर्णित समस्त पात्र अपने कर्त्तव्यों एवं उत्तरदायित्वों का निर्वहन करते हुए सामाजिक एवं राष्ट्रीय विकास में प्रमुख भूमिका निभाते हैं। सबका प्रमुख उद्देश्य लोकमंगल की भावना से भावित था।

**प्रजाः प्रजाः स्वा इव तन्त्रयित्वा निषेवते शान्तमना विविक्तम्।**
**यूथानि संचार्य रविप्रतप्तः शीतं दिवा स्थानमिव द्विपेन्द्रः॥**[2]

इसी प्रकार आज का हमारा जो वर्तमान संस्कृत साहित्य है उसमें भी पर्याप्त मात्रा में समाज एवं राष्ट्रीयता की भावना के विकास पर कवियों ने ध्यान दिया है। आधुनिक संस्कृत महाकवि प्रो० अभिराज राजेन्द्र मिश्र की शताधिक काव्य कृतियाँ समाज एवं राष्ट्र के विकास की तथा उसके कल्याण का प्रतिनिधित्व करती हैं। इक्षुगन्धा, पुनर्नवा, हविर्धानी, नाट्यनवगव्यम, नाट्य पञ्चगव्यम, नाट्यनवग्रहम आदि कथा, कहानी, काव्य एवं नाट्य कृतियों में प्रो० मिश्र ने समाज में व्याप्त कुत्सित मानसिकताओं, कुरीतियों को दूर करने पर अत्यधिक बल दिया है तथा वर्तमान समाज को दिशा निर्देश प्रदान किया है। इसी प्रकार रेवा प्रसाद द्विवेदी ने 75 सर्गीय महाकाव्य स्वातन्त्रम सम्भवम् में भारत के स्वतन्त्रता के हतिहास के साथ–साथ राष्ट्र एवं समाज के निर्माण की बातें अभिव्यक्त हुई हैं।

प्रो० अभिराज राजेन्द्र मिश्र ने अपनी इच्छुगन्धा नामक कहानी संकलन के एक शीर्षक 'शतपर्विका' में एक पिता का अपनी पुत्रियों से द्वेष वर्णित है जो वाद में पुत्रियों की सेवा से दूर हो जाता है। बड़ी ही रोचक कहानी के माध्यम से कवि ने समाज में व्याप्त पुत्रियों के प्रति पिता की कुत्सित मानसिकता को दूर किया है। इक्षुगन्धा में कुत्सित मानसिकता के विरुद्ध प्रो० मिश्र का कथन है–**''त्वया भृशमुपरुद्ध आसम्। त्वया मंत्रितमासीत् पुत्रीपुत्रयोर्न कोऽपि विशेषः। भाग्यायत्तमेव मनोवाञ्छितसन्ततिजन्म। अत्र पुरुषाधिकारो न प्रभवति। परन्तु मया मूढेन त्वामपि तिरस्कुर्वता मन्दबुद्धिरियमानीतः पुत्रवन्तमात्मानं विधातुम्। मूढोऽसौ नगरबीथीषु शृंगाटकेष्वाहिण्डमानः सकृदपि मदवस्थां मद्रोगं न चिन्तयति। एकवारमपि शय्यासमीपमागत्य तेन शूकरेण मत्कुशलमानमयं वा न पृष्टम्।**[3] प्रो० हरिनारायण दीक्षित ने अपने वर्तमान विरचित महाकाव्य में समाज के इसी पुत्र–पुत्री भेद रूपी कुत्सित मानसिकता को दूर करने हेतु कहा है–

**सुपाठनीया सुतवत् सुताऽपि भेदो विधेयो न तत्र कश्चन।**
**गार्हस्थ्यमानस्य कृते ह्यभाविमावावश्यकौ स्तो रथचक्रसन्निभौ॥**[4]

इसी प्रकार उन्होंने समाज में व्याप्त दहेज प्रथा को दूर कर एक सुशिक्षित समाज के निर्माण की बात कही है–

1. Report of the Sanskrit commission p-72
2. अभि० 6/5
3. इक्षुगन्धा–शतपर्विका–पृ० 85
4. भीष्मचरितम् 18/26

**पिता च पुत्रस्य विवाह कर्मणि कांक्षेद् वधूपक्षजनान्न यौतुकम्।**
**न कल्यवर्तस्य धनस्य लब्धये विमानयेत्सज्जनतां च सद्गुणान्॥**[1]

अर्थात् पिता अपने पुत्र के विवाह में दहेज की लालच न करें तुच्छ धन के लिये व्यक्ति का अपनी सज्जनता और सद्गुण को पतित नहीं करना चाहिए। यह ध्यातव्य है कि मात्र शास्त्र का आश्रय लेकर कर्त्तव्य का निर्णय नहीं किया जा सकता है अपितु युक्ति और विचार से रहित कार्य से भी धर्म की हानि होती है।

**केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्ण्णयः।**
**युक्तिहीने विचरो तु धर्महानिः प्रजायते॥**

इस प्रकार संस्कृत वाङ्मय में प्राचीन साहित्य से लेकर वर्तमान तक राष्ट्र एवं समाज के संवर्धन के स्वरूप का विकास दिखाई देता है। इसप्रकार राष्ट्र एवं समाज के निर्माण में संस्कृत शास्त्र एवं साहित्य संजीवनी के तुल्य है जिससे राष्ट्र और मानवता के विकास में एक स्वस्थ एवं सशक्त दिशा प्राप्त होगी। अतएव **''ऋतं सत्यं तपो राष्ट्रं श्रमो धर्मश्च कर्म च''**[2] ये सातों तत्त्व सप्त पदार्थों के समान ही राष्ट्र एवं समाज के निर्माण में उपादान कारक हैं, जिनके द्वारा आधुनिक राष्ट्र को भी उत्तम राष्ट्र के रूप में निर्मित किया जा सकता है।

समाज एवं राष्ट्र के निर्माण में साहित्य तथा साहित्यकारों की प्रमुख भूमिका होती है, क्योंकि साहित्य समाज की चित्तवृत्तियों का संचित प्रतिबिम्ब होता है अतएव बदलती हुई सामाजिक चित्तवृत्तियों के साथ ही साहित्य के स्वरूप में भी परिवर्तन होता है। समाज और साहित्य का यह समन्वयात्मक परिवर्तन ही एक सशक्त राष्ट्र की नीव स्थापित करता है। ध्वन्यालोककार ने अविविक्षितवाच्य ध्वनि विवेचन के प्रसंग में उदाहरण रूप में कहा है कि–

**सुवर्णपुष्पा पृथिवीं चिन्वन्ति पुरुषास्त्रयः।**
**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥**[3]

अर्थात् सुसम्पन्न सुवर्ण पुष्पा पृथिवी का चयन तीन प्रकार के लोगों द्वारा किया जाता है। शूर, कृतविद्य और सेवाभाव सम्मपन्न। इनमें कृतविद्य अर्थात् विद्या निपुण कवि होता है जो स्वच्छ समाज का निर्माण करने में महती भूमिका निभाता है। वस्तुतः साहित्य अमृत तुल्य उस औषधि के समकक्ष है जिसके द्वारा सहजता से मूढचित्त को **''रामादिवत्वर्तितव्यं न रावणादिवत्''** रूपी उपदेश के माध्यम से उसके चित्तविक्षोभ को दूर किया जा सकता है। व्यक्ति अपने वास्तविक स्वरूप का ज्ञान तथा समस्त लौकिक–अलौकिक विषयों का ज्ञान साहित्य से ही प्राप्त कर सकता है क्योंकि वैदिक साहित्य से लेकर लौकिक साहित्य तक ऋषियों और महर्षियों तथा कवियों द्वारा समस्त लौकिकालौकिक ज्ञान इसमें समाहित किया गया है। अतः समाज के निर्माण में संस्कृत भाषा साहित्य तथा साहित्यकारों का योगदान अविस्मरणीय है।

---

1. भीष्मचरितम् 8/27
2. अथर्ववेद 11.9.17
3. ध्वन्यालोक 1/13 वृत्तिभाग

# आधुनिक महाकाव्यों में समत्व की भावना

## (स्वातन्त्र्यसम्भवम् के विशेष आलोक में)

**डॉ. कमलेश रानी**

आधुनिक संस्कृत साहित्य में प्रो. रेवाप्रसाद द्विवेदी द्वारा रचित स्वातन्त्र्यसम्भवम् महाकाव्य स्वयं में अनुपम और अनूठी कृति है। यह महाकाव्य कवि की प्रतिभा का प्रत्यक्ष परिचायक है। इसका प्रकाशन काशी-हिन्दू-विश्वविद्यालय, वाराणसी से 1990 ई. में हुआ है। ''भारतीय स्वतन्त्रता-संग्राम'' के सन् 1957 ई. से लेकर वर्तमान भारतीय राजनीतिक घटनाक्रम तक का वर्णन इसके 77 सर्गों में किया गया है। इसमें राष्ट्रिय प्रेम और पारस्परिक समन्वय की भावना को कवि ने पदे-पदे स्थापित किया है, जो देशवासियों के हृदय में क्रान्ति का संचार करते हैं। विभिन्न भारतीय घटनाक्रमों, ऐतिहासिक तथ्यों, क्रान्तियों, दुराचारों, अत्याचारों, दमननीतियों के वर्णन के साथ-साथ कवि ने इस महाकाव्य में पारस्परिक समन्वयवादिता का जो सन्देश संसार को प्रदान किया है वह अत्यन्त ही उपयोगी तथा रोचक है। इसको आत्मसात कर प्रत्येक व्यक्ति साम्प्रदायिकता की भावना से ऊपर उत्कृष्ट राष्ट्र चिन्तक और समाज-सेवी बन सकता है। यथा-

**नो मस्जिदेन कलहायति मन्दिरं ते नो मस्जिदं च कलहायति मन्दिरेण।**
**यस्त्वत्र हन्त कलहायति सोऽतिमाननामाभिमानगरलः खलु दर्पसर्पः॥**[1]

**धर्मो न पीडयति किञ्चिदपि प्रजानां संभूतये स रुचिरः कोऽपि मार्गः।**
**यः संप्रदायकलहः मानवाख्ये सिन्धौ कुतोऽपि पतितो ननु शिशुमारः॥**[2]

पूर्वकाल में भारत देश को सोने की चिडियाँ की पदवी प्राप्त थी। उसका मुख्य कारण था भारत देश के वासियों की समन्वयवादी नीति और उसकी सम्पन्नशीलता। भारत राष्ट्र समस्त वैदेशिक राष्ट्रों के प्रति अपने आविर्भाव काल से ही समन्वयवादी रहा है। उसने प्रत्येक देश को भ्रातृत्व एवं समत्व की भावना से ही देखा है। परन्तु भारत के प्रति अन्य देशों की दृष्टि इस प्रकार की नहीं रही। परिणामस्वरूप ही अंग्रेजों एवं अन्य आक्रमणकारियों की कुदृष्टि ने इस देश को तहश-नहश किया, जिसके कारण भारत देश में स्वतन्त्रता के लिए संघर्ष की आवश्यकता पड़ी और भारतीयों ने अपनी एकता और अखण्डता को बनाये रखने के लिए वैदेशिकों की दमनकारी नीति का प्रबल विरोध किया। इस प्रकार प्रस्तुत महाकाव्य में कवि ने जहाँ एक ओर भारत की राजनीतिक स्थिति का वर्णन किया है वहीं मानवता के मूल तत्त्व समत्व का भी निरूपण किया

1. स्वातन्त्र्यसम्भवम् - 18/50
2. स्वातन्त्र्यसम्भवम् - 27/16

है। स्वातन्त्र्यसम्भवम् के प्रथम सर्ग के अधोलिखित पद्य में कवि ने साम्प्रादायिक भावनाओं से उठकर समस्त धर्म के समत्व की बात का प्रतिपादन करते हुए कहा है–

**प्रतिकान् परमार्थत्वे नयद्भ्यो भूतसंहतौ।**
**भूगोलशकलोत्तीर्णप्रभुत्वप्रदहे नमः।।**[1]

अर्थात् प्रत्येक ग्रामवासी, प्रान्तीयजन तथा राष्ट्र के लोगों को यह विचार करना चाहिए कि सबका परमात्मा एक है। अतः हम पारस्परिक धार्मिक एवं सामाजिक तथा सांस्कृतिक कलह में न उलझे। सूक्ष्म तत्त्व पर विचार करें क्योंकि सूक्ष्म तत्व जो सबके भीतर है उस पर न विचार करने के कारण ही लोग अपने-अपने धार्मिक प्रतीकों को लेकर लड़ रहे हैं। उदाहरणार्थ जैसे कोई अल्लाह के लिए, कोई राम के लिए तथा कोई ईसा मसीह के लिए। इसलिए इन विवादों में न पड़कर हम सब एक परमात्मा की सन्तान हैं। अतः आपस में मिलकर रहें।

कवि ने भाषायी अनेकता में भी एकता की बात को दृढतापूर्वक समर्थित किया है। उनका कथन है–

**भाषा काप्यस्तु संभाषा तत्र विज्ञानसाक्षिकी।**
**एकैव जडसंपत्तिभुक्तिमात्रास्वमूषु नः।।**[2]

अर्थात् इस संसार की भाषा कोई भी हो परन्तु सब में भावार्थ तो एक ही होता है। यथा– परमात्मा, अल्ला, ईसा आदि सब भाषायी भेद से अलग हैं परन्तु भावार्थ सबका एक ही है। सब एक ही परमतत्त्व का ही प्रतिपादन करने वाले हैं, जो सबका उत्पन्नकर्ता, पालक तथा नियन्ता है। इस प्रकार कवि ने इस पद्य के माध्यम से समत्व की भावना को ही प्रस्फुरित किया है।

इस संसार में स्त्री और पुरुष का विशेष महत्व है। बिना इन दोनों के समत्व के सृष्टि का आविर्भाव असम्भव है। अतः इन दोनों के भी ऐक्य का प्रतिपादन करते हुए कवि का कथन है–

**द्विधा विभक्तावपि निर्विभागौ, पुमाँश्च योषिच्च तवैव भागौ।**
**तयोर्द्वयोर्द्वैतमयी विभूतिर्विभूतियोगः खलु विश्वलक्ष्म्याः।।**[3]

अर्थात् नर और नारी रूप में विभक्त प्रत्येक जोड़ों में एकत्व की ही भावना का प्रणयन है। इसीलिए जीवन चक्र को अग्रसरित करने में दोनों की अतुल्य भूमिका है। इस भूमिका का निर्वाह करने में इस संसार की महाविभूति विश्वलक्ष्मी कारण हैं। पुनः इसी बात का प्रतिपादन 21वें सर्ग के 62वें पद्य में भी किया गया है कि नर और नारी का भेद समाज की सेवा करने में नहीं देखा जाता। यथा– **न स्त्रीत्वं न च पुरुषत्वमेव पश्यत्यध्वर्यौ मनुजसमाज-वारिवास्या।**

---

1. स्वातन्त्र्यसम्भवम् महाकाव्य-1/22
2. वही-1/25
3. वही-2/16

कवि ने वसुधा को एक कुटुम्ब के रूप में प्रतिपादित करते हुए तृतीय सर्ग के पद्य में इस प्रकार कहा है-

**अस्यां धरित्र्यां यजमानरूपा उग्राः शिवा यत्र पुरश्चरन्ति।**
**ग्रामेष्वरण्येषु पुरेषु पुंसां पुञ्जेषु वृन्दारक-वन्दितेषु॥**[1]

अर्थात् भारत भूमि वह धरती है जिस पर भगवान् शिव विभिन्न स्वरूपों में विभिन्न स्थलों पर भले ही पूजे जाते हैं यथा- अग्नि, वायु, सूर्य, चन्द्रमा तथा जल आदि रूप में (जैसा कि कालिदास के अभिज्ञानशाकुन्तलम् में भी अष्टमूर्ति का उल्लेख है)[2]; परन्तु वस्तुतः वे अपने भेद सहित अभेद रूप में एक ही तत्त्व हैं।

तृतीय सर्ग के ही अधोलिखित श्लोक में कवि ने भारत के राष्ट्रसपूतों की एकता और अखण्डता का उल्लेख करते हुए कहा है-

**ऋजु - कुटिल - गतीनामध्वनीना भरतभुवनधात्रीस्तन्यपीना युवानः।**
**परिणतवयसां तामान्तरैक्याभिधानामुषसि रतिपरीताः सामिधेनीं प्रजेपुः॥**[3]

अर्थात् स्वतन्त्रता प्राप्ति के लिए भारत के वीर सपूतों ने अलग-अलग मार्गों का चयन किया था। जैसे कोई ऋजु मार्गी था कोई कुटिल मार्गी परन्तु सबका यही उद्देश्य था भारत को स्वतन्त्र राष्ट्र बनाकर उसमें एकता और अखण्डता स्थापित करना। अतः प्रातः काल वे प्रार्थना सभा में ऋग्वेद के संगठन सूक्त के मन्त्र का ही पाठ किया करते थे, जिसमें एक साथ चलने की भावना का ही वर्णन हुआ है।[4] इस प्रकार कवि ने इस पद्य में समत्व की भावना का उद्घाटन किया है।

हिन्दू और मुस्लिम एकता का वर्णन करते हुए कवि ने निम्नलिखित श्लोक में कहा है-

**अयवनयवनानामैक्यमस्यां धरित्र्यां यदभजत गरिष्ठां रूढिमर्वाग् युगेभ्यः।**
**न खलु शिथिलमेतत् कर्त्तुमीष्टे स्म शत्रुर्गिरिमिव करिपोतः प्रत्यगुच्चैर्जिघांसन्॥**[5]

अर्थात् आजादी की लड़ाई के समय भारत में हिन्दु और मुस्लिमों में पारस्परिक समत्व की भावना का उदय हो गया, जिससे भारत की शक्ति और प्रबल हो गई। अतः फिर अग्रेजों को भारत को छोड़ना ही पड़ा।

नवम सर्ग में संघ-शक्ति की महत्ता का वर्णन किया गया है कि संसार में कितना भी बड़ा संकट क्यों न उत्पन्न हो जाए, उसे संघ-शक्ति के द्वारा ही दूर किया जा सकता है। संघ (एक-जुटता) में जो शक्ति है, वह किसी और में नहीं है- जैसा कि स्वातन्त्र्यसम्भवम् महाकाव्य में आचार्य द्विवेदी का कथन है-

---

1. वही-3/4
2. अभिज्ञानशाकुन्तलम्-1/1
3. स्वातन्त्र्यसम्भवम् महाकाव्य-3/52
4. ऋग्वेद-संगठन सूक्त
5. स्वातन्त्र्यसम्भवम् महाकाव्य-3/56

**सहस्रमब्दान् परिभुक्तरत्नां रत्नाकरान्तां वसुधामरातिः।**
**नैषिष्यदुन्मुच्य सुखं प्रयातुं व्यरोत्स्यदेनं न यदि स्वयं सा।।**[1]

अर्थात् एकता रूपी सूर्य में इतनी शक्ति है कि उसके समक्ष घोर अन्धकार भी नष्ट हो जाता है, जिस प्रकार सूर्य विश्व के अन्धकार को अपने सामूहिक प्रकाश से नष्ट कर देता है, उसी प्रकार लोक अपनी सांघिक शक्ति से संसार के समस्त अज्ञानात्मक, प्रपञ्चात्मक दुष्कृत्य को विनष्ट कर देता है। इसी प्रकार का एक और पद्य जिसमें समत्व का पर्याय निहित है वह निम्नलिखित है-

**नीहारभूमीधरतो महेन्द्राचलावधि द्रोग्धरि भारतीये।**
**अलं तमस्काण्डमिवोष्णरश्मौ स्थेमानमाप्तुं न बभूव तन्त्रम्।।**[2]

अर्थात् अब (स्वतन्त्रता संग्राम के समय) हिमालय से लेकर श्रीलंका के महेन्द्र पर्वत तक सम्पूर्ण भारत विद्रोह में खड़ा हो गया, तो शत्रु सूर्य के समक्ष तमस्काण्ड के समान स्थिरता को प्राप्त करने में सफल नहीं हो सका।

प्रस्तुत पद्य में कवि का कथन इस बात में निहित है कि अगर बड़े से बड़ा कार्य भी साथ मिलकर (संघ बनाकर) किया जाए तो उस कार्य की सिद्धि में कोई बाधा नहीं आती वह कार्य निश्चित ही सिद्ध हो जाता है। इस बात के समर्थन में कवि ने कीटादि का उदाहरण देकर संघ-शक्ति के महत्व को इस प्रकार दर्शाया है-

**न मत्कुणानामपि, मक्षिकाणामपि, क्षुपाणामपि वा समूहम्।**
**विरोद्धुमभ्युद्यतसंघशक्तिं पितामहोऽपि क्षमते विसोढुम्।।**[3]

अर्थात् खटमल, मक्खियों और पौधों का भी समूह यदि संघ बनाकर उसके द्वारा विरोध करे तो उसका सामना पितामह भी नहीं कर सकते।

स्वतन्त्रता-संग्राम में वीरों ने बढ़-चढ़ कर भाग लिया तो सम्पूर्ण भारत एकत्व और समत्व की भावना से एक साथ खड़ा था। भारतवर्ष को स्वतन्त्रता प्राप्त कराने के उद्देश्य से सम्पूर्ण भारतीय हिन्दू-मुस्लिम-सिख-ईसाई आदि धार्मिक अलगाव की भावना से अलग हटकर एकजुट हो चुके थे। इसी बात का समर्थन अधोलिखित पद्य द्वारा किया गया है-

**सर्वाऽपि भूमिर्भरतस्य भूत्वा धृतैकदेहेव ततस्तदानीम्।**
**व्रणं यथा कर्त्तयितुं परेषां राज्यं जजागार समिद्धचित्ता।।**[4]

अर्थात् भरत (राजा) की यह पूरी भूमि (भारतवर्ष) उन दिनों इसी कारण एक शरीर धारण की हुई थी। परराज्य को व्रण के समान काटकर हटाने के लिए यह प्रदीप्त चित्त से जाग उठी।

1. वही-9/16
2. वही-9/20
3. वही-9/23
4. वही-9/51

